Poona Oriental Series No. 69

श्रीमदमरसिंहविरचितम्

# नामलिङ्गानुशासनम्

## अमरकोशः ( मूलमात्रम् )

# AMARA'S NĀMALINGĀNUSĀSANAM (Text)

**A Sanskrit Dictionary in three Chapters
Critically Edited with Introduction
AND
English equivalents for each word
and English Word-Index**

BY

Dr. N. G. SARDESAI, L. M. & S.

AND

D. G. PADHYE,
*Sanskrit Teacher,*
[M]ODERN HIGH SCHOOL, POONA



POONA
ORIENTAL BOOK AGENCY
1940

*Poona Oriental Series No. 69*

श्रीमदमरसिंहविरचितम्

# नामलिङ्गानुशासनम्

## अमरकोशः (मूलमात्रम्)

# AMARA'S NĀMALINGĀNUS'ĀSANAM (Text)

**A Sanskrit Dictionary in three Chapters Critically Edited with Introduction AND English equivalents for each word and English Word-Index**

BY

Dr N. G. SARDESAI, L. M. & S.

AND

D. G. PADHYE,
*Sanskrit Teacher*
MODERN HIGH SCHOOL, POONA

POONA
ORIENTAL BOOK AGENCY
1940

# PREFACE

The study of any Language consists in mastering its vocabulary and Grammar and then its Literature. To master the vocabulary simply becomes a hard task, if some means for remembering the words of that Language are not devised, either by studying the best Literature of that Language or versification of words with their meaning. In no Language except Sanskrit, this feat of versification has been successfully accomplished. Consequently an old Pandit having mastered the versified vocabulary of Sanskrit easily understands or scans any difficult verse given to him without the aid of Dictionary.

In the Sanskrit Language, so far as over 100 such versified vocabularies and old commentaries, have upto now been discovered. While commenting on any Sanskrit work commentators quote such Lexicons as Amarkośa, Vaijayanti, Śāśvat Kosa etc., as authorities for the exact meaning of such words. The chief lexicon, most highly valued by all is Amara's (5th century) Nāmalingānuśāsana. It has been commented upon by many excellent scholars, such as क्षीरस्वामिन् (9th century), रायमुकुट (A.D. 1431), लिंगाभट्ट (12th century), भानुजी दीक्षीत (9th century) etc. Among them Kṣhīraswamin's commentary stands first, on account of its richness of quotations from various authors. While editing it with the text of Amara's Nāmalingānuśāsana, we have made new arrangements of separately printing the text, so that, it could be useful to both students studying Sanskrit through the medium of English and to the Sanskrit knowing persons, by way of enriching their English vocabulary. On account of this want, our Pandit class are at a discount to raise their heads equal to the English-knowing Professors. From the

perusal of the text in the following pages, it may be seen that the following changes have been made:

(1) The printing of original Sanskrit words has been made in bold type. (2) While their meaning and their grammatical notes, as given by Amarasinha, have been printed in ordinary types. (3) English equivalents have been given in the margin with their number for each word. (4) The verses considered as क्षेपक by क्षीरस्वामिन् have been separately shown and numbered.

These arrangements would help both the teachers and the *taught* to study the Sanakrit vocabulary very conveniently. If this book of Amarakośa be studied in the High Schools from Standards IV to VII by convenient divisions for each standard, it would be a boon to the students, so much so that they would be able to read any Sanskrit book easily like an English novel. We conclude, therefore, with a sincere request to the Educational authorities to get this book prescribed in High Schools with convenient divisions of it from St. IV to VII and thus revive the study of the dying Sanskrit Language.

---

*Printed by*—S. R. Sardesai, B.A., LL.B., Navin Samarth Vidyalaya's Samarth Bharat Press, 41 Budhwar Peth, Poona 2.

*Published by*—Dr. N. G. Sardesai, L. M. & S., Manager, for the Oriental Book Agency, 15 Shukrawar Peth, Poona 2.

# नामलिङ्गानुशासनस्य विषयाणामनुक्रमणिका

अथ

श्रीमदमरसिंहविरचितं

# नामलिङ्गानुशासनम्

## प्रथमं-स्वरादि-काण्डम् ।

### मङ्गलाचरणम् ।

१ यस्य ज्ञान-दया-सिन्धोर-गाधस्याऽनघा गुणाः, ।
सेव्यताम-क्षयो धीराः ! स श्रिये चाऽमृताय च ॥

### चिकीर्षित-प्रतिज्ञा

२ समाहृत्याऽन्य-तन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।
संपूर्णमुच्यते वर्गै 'र्नाम-लिङ्गाऽनुशासनम्'. ॥

### ग्रन्थ-परिभाषा

३ प्रायशो रूप-भेदेन, साहचर्याच्च कुत्रचित् ।
स्त्री-पुन्नपुंसकं ज्ञेयं, तद्विशेष-विधेः क्वचित्. ॥

४ भेदाऽऽख्यानाय न द्वन्द्वो, नैक-शेषो, न संकरः ।
कृतोऽत्र भिन्न-लिङ्गानामनुक्तानां क्रमादृते. ॥

५ त्रि-लिङ्ग्यां त्रिष्विति पदं, मिथुने तु द्वयोरिति, ।
निषिद्ध-लिङ्गं शेषाऽर्थं, त्वन्ताऽथाऽऽदि न पूर्व-भाक्. ॥

## अथ स्वर्गवर्गः ।

9 Heaven

६ स्वरव्ययं स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः ।
सुरलोको द्यो-दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥

26 Gods or deities.

७ अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥

८ आदितेया दिविषदो लेखा अदितिनन्दनाः ।
आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥

९ बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ॥

1 Sets of divinities.

१० आदित्य-विश्व-वसवस्तुषिताऽऽभास्वराऽनिलाः ।
महाराजिक-साध्याश्च रुद्राश्च गणदेवताः ॥

1 Demi-gods, and Nymphs.

११ विद्याधराऽप्सरो-यक्ष-रक्षो-गन्धर्व-किन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥

10 Giants or Titans.

१२ असुरा दैत्य-दैतेय-दनुजेन्द्रारि-दानवाः ।
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥

18 A *Jina* or *Buddha*.

१३ सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ॥

१४ षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।
मुनीन्द्रः श्रीघनः शास्ता मुनिः, शाक्यमुनिस्तु यः ।

7 Buddha.

१५ स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चाऽर्कबन्धुश्च मायादेवीसुतश्च सः ॥

29 Brahmā.

१६ ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः ।
हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः ॥

१७ धाताऽब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः ।
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः ॥
१ 'नाभिजन्मा ऽण्डजः पूर्वो निधनः कमलोद्भवः ।
सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः' ॥

46 Viṣṇu.

१८ विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥
१९ दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥
२० उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥
२१ देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥
२२ विश्वम्भरः कैटभजिद् विधुः श्रीवत्सलाञ्छनः ।
२ 'पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ।
जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः' ॥

2 Vasudeva.

वसुदेवोऽस्य जनकः स एवाऽऽनकदुन्दुभिः ॥

17 Balarāma.

२३ बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।
रेवतीरमणो रामः कामपालो हलायुधः ॥
२४ नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।
संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥

19 Kāmadeva.

२५ मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥
२६ शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥

4 Aniruddha. २७ ब्रह्मसूर्ऋष्यकेतुः स्यादनिरुद्ध उषापतिः ।
14 Lakṣmī. लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥
३ 'इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।
भार्गवी लोकजननी क्षीरसागरकन्यका' ॥

1 *Kṛṣṇa's* conch. २८ शङ्खो लक्ष्मी-पतेः पाञ्चजन्यश्चक्रं सुदर्शनम् । 1 Discus
1 mace. कौमोदकी गदा, खड्गो नन्दकः, कौस्तुभो मणिः ॥ 1 sword. 1 jewel.
1 Bow. ४ 'चापः शार्ङ्गं, मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम् । 1 Symbol.
4 Horses. अश्वाश्च शैव्य-सुग्रीव-मेघपुष्प-बलाहकाः, ॥
1 Charioteer. ५ सारथिर्दारुको, मन्त्री तूद्धवश्चाऽनुजो गदः ' ॥ 1 Minister. 1 Younger brother.

9 Vehicle-Garuḍa. २९ गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।
52 Śiva. नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥
३० शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः ॥
३१ भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥
३२ उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥
३३ कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥
३४ गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥
' अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ' ॥

1 braided hair. ३५ कपर्दोऽस्य जटाजूटः, पिनाकोऽजगवं धनुः । 2 bow.
1 Attendants. प्रमथाः स्युः पारिषदा, ब्राह्मीत्याद्यास्तु मातरः ॥ 1 divine mothers.

3 Superhuman powers. ३६ विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।

21 Bhavānī. उमा कात्यायनी गौरी काली हैमवतीऽऽश्वरी ॥

३७ शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।

अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका ॥

३८ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ॥

8 Gaṇeśa. विनायको विघ्नराज-द्वैमातुर-गणाधिपाः ।

३९ अप्येकदन्त-हेरम्ब-लम्बोदर-गजाननाः ॥

17 Kārti-keya. कार्तिकेयो महासेनः शरजन्मा षडाननः ।

४० पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥

बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।

४१ षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥

6 Nandī ६ 'शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः ।

2 Divine mothers. कर्ममोटी तु चामुण्डा, चर्ममुण्डा तु चर्चिका' ॥

26 Indra. इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः ।

४२ वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥

जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।

४३ सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥

वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।

४४ जम्भभेदी हरिहयः स्वाराण् नमुचिसूदनः ॥

संक्रन्दनो दुश्च्यवनस्तुराषाण् मेघवाहनः ।

४५ आखण्डलः सहस्राक्षः, ऋभुक्षास्तस्य तु प्रिया ॥

3 Śacī. पुलोमजा शचीऽन्द्राणी, नगरी त्वमरावती । 1 *Indra's City.*

1 horse. 1 charioteer. ४६ हय उच्चैःश्रवाः, सूतो मातलिर्नन्दनं वनम् ॥ 1 garden.

1 palace. स्यात् प्रासादो वैजयन्तो, जयन्तः पाकशासनिः । 2 Jayanta.

4 *Indra's* elephant. ४७ ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः ॥

10 Thunderbolt. ह्रादिनी वज्रम-स्त्री स्यात् कुलिशं भिदुरं पविः ।

४८ शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥

2 The car of *Indra*. व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ॥ 1 A divine sage.

2 The council of gods. ४९ स्यात् सुधर्मा देवसभा, पीयूषममृतं सुधा । 3 The food of the gods.

4 The river of heaven. मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ॥

5 The mountain *Sumeru*. ५० मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ।

1 Five celestial trees. पञ्चैते देवतरवो मन्दारः पारिजातकः ॥

५१ संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।

2 Sanatkumāra. सनत्कुमारो वैधात्रः, स्वर्वैद्यावश्विनीसुतौ ॥

6 The *Aśvins*. ५२ नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ।

2 Nymphs स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशी-मुखाः ॥

2 Celestial musicians. ५३ हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ।

34 Fire. अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ॥

५४ कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ।

बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुधः ॥

५५ आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ।

रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ॥

५६ हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ।

सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ॥

3 Submarine fire. ५७ शुचिरप्पित्त, मौर्वस्तु वाडवो वडवानलः ।

5 Flame. वह्नेर्द्वयोर्ज्वाल-कीलावर्चिर्हेतिः शिखा स्त्रियाम् ॥

2 A spark. ५८ त्रिषु स्फुलिङ्गोऽग्निकणः, संतापः संज्वरः समौ ।
2 A burn.
1 Meteor. ७ 'उल्का स्यात् निर्गतज्वाला, भूतिर्भसित-भस्मनी ॥
5 Ash.
3 Forest fire. क्षारो रक्षा च, दावस्तु दवो वनहुताशनः' ।

14 Yama. ५९ धर्मराजः पितृपतिः समवर्ती परेतराट् ॥
कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ।

६० कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ॥
15 A giant or ghost. राक्षसः कोणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ।
६१ रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ॥
यातुधानः पुण्यजनो नैर्ऋतो यातु-रक्षसी ।

5 Varuna ६२ प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ॥
20 Air or wind. श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ।
६३ पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगाः ॥
समीर-मारुत-मरुत्-जगत्प्राण-समीरणाः ।
६४ नभस्वद्-वात-पवन-पवमान-प्रभञ्जनाः ॥
2 Whirlwind. ८ 'प्रकम्पनो महावातो, झञ्झावातः सवृष्टिकः ।' 1 Storm.
5 Air inhaled. &c. प्राणोऽपानः समानश्चोदान-व्यानौ च वायवः ॥
5 Speed or velocity. ६५ शरीरस्था इमे, रंहस्तरसी तु रयः स्यदः ।
11 Quick, or swiftly. जवो, ऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥
६६ सत्वरं चपलं तूर्णमविलम्बितमाशु च ।
9 Eternal or continually. सततेऽनारताऽश्रान्त-संतताऽविरताऽनिशम् ॥
14 Much or excessive. ६७ नित्याऽनवरताऽजस्रमप्यथाऽतिशयो भरः ।
अतिवेल-भृशाऽत्यर्थाऽतिमात्रोद्गाढ-निर्भरम् ॥
६८ तीव्रैकान्त-नितान्तानि गाढ-बाढ-दृढानि च ।
क्लीबे शीघ्राऽऽद्य-सत्त्वे स्यात्, त्रिष्वेषां सत्त्व-गामि यत् ॥

17 Kubéra. ६९ कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥
७० किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविल-श्रीद-पुण्यजनेश्वराः ॥

1 The garden of *Kube'ra.* ७१ अस्योद्यानं चैत्ररथं, पुत्रस्तु नलकूबरः । 1 *Nalakūvara* (his son).
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ 1 *Kailasa.* 1 *Kube'ra's* city. 1 Vehicle.

७२ स्यात् किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः । 4 His attendants

2 His treasure. निधिर्नाशेवधिर्भेदाः पद्म-शङ्खाऽऽदयो निधेः ॥

Auriferous gems. इति स्वर्ग-वर्गः १, अत्र मूलश्लोकाः ७२, "क्षेपकश्लोकाः ७ $\frac{1}{2}$" ॥

---

## अथ व्योमदिग्वर्गः २ ( अ )

22 The sky or atmosphere. १ द्यो दिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।
नभो ऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥
२ वियद् विष्णुपदं वा तु पुंस्याकाश-विहायसी ।
विहायसो ऽपि नाको ऽपि द्युरपि स्यात् तदव्ययम् ॥

5 Space, region or quarters. १ 'तारापथो ऽन्तरिक्षं च मेघाध्वा च महाविलम्' ।

इति व्योम-वर्गः २, अत्र मूलश्लोकौ २, " क्षेपकश्लो० $\frac{1}{2}$ "

---

## अथ दिग्-वर्गः ( ब )

1 Several quarters. ३ दिशस्तु ककुभःकाष्ठा आशाश्च हरितश्च ताः ॥
प्राच्यवाची-प्रतीच्यस्ताः पूर्व-दक्षिण-पश्चिमाः ।

1 Relating to quarters Relating to ४ उत्तरा दिगुदीची स्याद्, दिश्यं तु त्रिषु दिग्भवे ॥ 1 Situaled. Relating to each quarter.
'अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ।

| | | |
|---|---|---|
| each quarter. | २ प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु' ॥ | |
| 1 The lords of quarters and points. | इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् । | |
| | ५ कुबेर ईशः पतयः पूर्वाऽऽदीनां दिशां क्रमात् ॥ | |
| | 'रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः । | |
| | ३ बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः' ॥ | |
| 1 Elephants, at the points. | ६ ऐरावतः पुण्डरीको वामनः कुमुदो ऽञ्जनः । | |
| | पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्-गजाः ॥ | |
| 1 Their females. | ४ 'करिण्यो ऽभ्रमु-कपिला-पिङ्गलाऽनुपमाः क्रमात् । | |
| | ताम्रकर्णी शुभ्रदन्ती चाऽङ्गना चाऽञ्जनावती ॥' | |
| 2 Intermediate point. | ७ क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् । | |
| 2 Included space. | अभ्यन्तरं त्वन्तरालं, चक्रवालं तु मण्डलम् ॥ | 2 The sensible horizon. |
| 15 A cloud. | ८ अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः । | |
| | धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ॥ | |
| | ९ घन-जीमूत-मुदिर-जलमुग्-धूमयोनयः । | |
| 2 A sucession of clouds. | कादम्बिनी मेघमाला, त्रिषु मेघ-भवे ऽभ्रियम् ॥ | 1 Belonging to clouds. |
| 4 The rattling of thunder. | १० स्तनितं गर्जितं मेघनिर्घोषे रसिताऽऽदि च । | |
| 10 Lightning. | शम्पा शतह्रदा-ह्रादिन्यैरावत्यः क्षणप्रभा ॥ | |
| 2 A clap of thunder. | ११ तडित् सौदामिनी विद्युच्चञ्चला-चपला अपि । | 2 A flash of lightning. |
| | स्फूर्जथुर्वज्रनिर्घोषो, मेघज्योतिरिरम्मदः ॥ | |
| 2 A rainbow. | १२ इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् । | 1 Indra's bow unbent. |
| 2 Rain. 2 Drought. | वृष्टिर्वर्षं, तद्-विघाते ऽवग्राहाऽवग्रहौ समौ ॥ | |
| 2 A hard shower. | १३ धारासंपात आसारः, शीकरो ऽम्बु-कणाः स्मृताः । | |
| 2 Thin rain. 2 Hail. | वर्षोपलस्तु करका, मेघच्छन्ने ऽह्नि दुर्दिनम् ॥ | 1 A cloudy day |

| | | |
|---|---|---|
| 8 Covering or disappearance. | १४ अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् । | |
| | अपिधान-तिरोधान-पिधानाऽऽच्छादनानि च ॥ | |
| 20 The moon. | १५ हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः । | |
| | विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ॥ | |
| | १६ अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः । | |
| | द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥ | |
| 1 A digit. | १७ कला तु षोडशो भागो, बिम्बोऽस्त्री मण्डलं त्रिषु । | 2 The disk of the sun or moon. |
| 4 A part. 1 Half. | भित्तं शकल-खण्डे वा पुंस्यर्द्धो, ऽर्द्धं समेंऽशके ॥ | |
| 3 Moon-light. | १८ चन्द्रिका कौमुदी ज्योत्स्ना, प्रसादस्तु प्रसन्नता । | 2 Purity or brightness. |
| 6 A spot or mark. | कलङ्काऽङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ॥ | |
| 1 Exquisite beauty. | १९ सुषमा परमा शोभा, शोभा कान्तिर्द्युतिश्छविः । | 4 Beauty or splendour. |
| 7 Frost. | २० अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ॥ | |
| 2 Ice and snow. | प्रालेयं मिहिका चा, ऽथ हिमानी हिमसंहतिः । | |
| 1 Cold or chillness. | २१ शीतं गुणे, तद्वदर्थाः सुषीमः शिशिरो जडः ॥ | |
| 7 Cold or frigid. | तुषारः शीतलः शीतो हिमः सप्ताऽन्य-लिङ्गकाः । | |
| 2 The polar star. 3 Agastya. | २२ ध्रुव औत्तानपादिः स्यात्, अगस्त्यः कुम्भसंभवः । | |
| 1 His consort. | मैत्रावरुणि, रस्यैव लोपामुद्रा सधर्मिणी । | |
| 6 A star. Asterisms. | २३ नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम् ॥ | 2 The head of Aries. |
| 2 Stars in the Southern scale. | दाक्षायिण्यो ऽश्विनीत्यादि-तारा, अश्वयुगश्विनी । | |
| 3 Stars in Cancer. | २४ राधा विशाखा, पुष्ये तु सिध्य-तिष्यौ, श्रविष्ठया ॥ | |
| 2 The Dolphin. | समा धनिष्ठाः स्युः, प्रोष्ठपदा भाद्रपदाः स्त्रियः । | |

2 The wing of Pegasus. २५ मृगशीर्षं मृगशिरस्तस्मिन्नेवाऽऽग्रहायणी ॥ 3 Orion.

1i Stars in h9s head. इल्वलास्तच्छिरो-देशे तारका निवसन्ति याः ।

1 The J'anet pupiter. २६ बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ॥
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ।

6 Venus. २७ शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ॥

5 Mars. अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ।

3 Mercury. २८ रौहिणेयो बुधः सौम्यः, समौ सौरि-शनैश्चरौ ॥ 2 Saturn.

5 The ascending node. तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ।

२९ सप्तर्षयो मरीच्यत्रि-मुखाश्चित्रशिखण्डिनः ॥ 1 Ursa major.

1 Signs of the Zodiac. राशीनामुदयो लग्नं, ते तु मेष-वृषा ऽऽदयः । Ascension.

54The Sun. ३० सूर-सूर्याऽर्यमाऽऽदित्य-द्वादशात्म-दिवाकराः ॥
भास्करा ऽहस्कर-ब्रध्न-प्रभाकर-विभाकराः ।
३१ भास्वद्-विवस्वत्-सप्ताश्व-हरिदश्वोष्णरश्मयः ॥
विकर्तना ऽर्क-मार्तण्ड-मिहिरा ऽरुण-पूषणः ।
३२ द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ॥
विभावसुर्ग्रहपतिस्त्विषाम्पतिरहर्पतिः ।
३३ भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ॥
'पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ।
५ कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥
प्रद्योतनो दिवमणिः खद्योतो लोकबान्धवः ।
६ इनो भगो धामनिधिश्चांऽशुमाल्यब्जिनीपतिः' ॥

1 Three of the sun's attendants माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः ।

5 The dawn. ३४ सूरसूतो ऽरुणो ऽनूरुः काश्यपिर्गरुडाग्रजः ॥

4 Halo. परिवेषस्तु परिधिरुपसूर्यक-मण्डले ।

11 A ray. ३५ किरणोस्र-मयूखांऽशु-गभस्ति-घृणि-रश्मयः ॥
भानुः करो मरीचिः स्त्री-पुंसयोर्दीधितिः स्त्रियाम् ।
11 Light. ३६ स्युःप्रभा-रुग्-रुचिस्त्विड्-भा-भाश्छवि-द्युति-दीप्तयः ॥
3 Sun-shine. रोचिः शोचिरुभे क्लीबे, प्रकाशो द्योत आतपः ।
4 Warmth. 3 Heat. ३७ कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ॥
2 Sultry vapour. तिग्मं तीक्ष्णं खरं तद्वत्, मृगतृष्णा मरीचिका ।
इति दिग्-वर्गः २ व. अत्र मूलश्लोकाः ३७, क्षे० ५$\frac{१}{२}$.

---

## अथ काल-वर्गः ३

4 Time. 2 First lunar day. १ कालो दिष्टोऽप्यनेहाऽपि समयोऽप्यथ पक्षतिः ॥
प्रतिपद् द्वे इमे स्त्रीत्वे, तदाऽऽद्यास्तिथयो द्वयोः ।
1 A lunar day.
5 A day. २ घस्रो दिनाऽहनी वा तु क्लीबे दिवस-वासरौ ॥
9 Morning. प्रत्यूषोऽहर्मुखं कल्यमुषः-प्रत्युषसी अपि ।
१ 'व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते' ॥
4 Eve. ३ प्रभातं च, दिनान्ते तु सायं संध्या पितृप्रसूः ।
1 Periods of the day. प्राह्णाऽपराह्ण-मध्याह्नस्त्रिसंध्य, मथ शर्वरी ॥ 1 Twilight.
12 Night. ४ निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरी-तमस्विन्यौ रजनी यामिनी तमी ॥
1 A dark night. ५ तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयाऽन्विता । 1 A moonlight night.
1 A night and two days. आगामि-वर्तमानाहर्युक्तायां निशि पक्षिणी ॥
1 A multitude of nights ६ गणरात्रं निशा बह्व्यः, प्रदोषो रजनीमुखम् । 2 Evening.
2 Mid-night. अर्धरात्र-निशीथौ द्वौ, द्वौ याम-प्रहरौ समौ ॥ 2 A watch.
1 The full and change of the moon. ७ स पर्वसंधिः प्रतिपत्-पञ्चदश्योर्यदन्तरम् ।
2 Last day of the half month. पक्षान्तौ पञ्चदश्यौ द्वे, पौर्णमासी तु पूर्णिमा ॥ 2 Day of full moon.

| | | |
|---|---|---|
| 1 Moon a little gibbous. | ८ कला-हीने सा ऽनुमतिः, पूर्णे राका निशाकरे। | 1 Moon quite full. |
| 4 Day of new moon. | अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ | |
| 1 no-Moon. | ९ सा दृष्टेन्दुः सिनीवाली, सा नष्टेन्दु-कला कुहूः। | 1 Moon light-horned. |
| 2 An eclipse. | उपरागो ग्रहो, राहु-ग्रस्ते त्विन्दौ च पूष्णि च ॥ | |
| 1 Eclipsed sun and moon. | १० सोपप्लवोपरक्तौ द्वौ, अग्न्युत्पात उपाहितः । | 2 meteor. |
| 1 Sun & moon. | एकयोक्त्या पुष्पवन्तौ दिवाकर-निशाकरौ ॥ | |
| 1 Sixteen-thirds. | ११ अष्टादश निमेषास्तु काष्ठा, त्रिंशत् तु ताः कला, । | 1 Eight seconds. |
| 4 minutes. | तास्तु त्रिंशत् क्षणस्ते, तु मुहूर्तो द्वादशाऽस्त्रियाम् ,॥ | 48 minutes. |
| 1 A day. | १२ ते तु त्रिंशदहो-रात्रः, पक्षस् ते दश पञ्च च, । | 1 A fort-night. |
| 1 Light & d.rk fort-nights. | पक्षौ पूर्वाऽपरौ शुक्ल-कृष्णौ, मासस्तु तावुभौ, ॥ | 1 A month. |
| A season. | १३ द्वौ द्वौ मार्गादि- मासौ स्यादृतुस्तैरयनं त्रिभिः,। | 1 A half year. |
| 1 A year. | अयने द्वे गतिरुदग् दक्षिणा ऽर्कस्य वत्सरः, ॥ | |
| 2 Equinox. | १४ सम-रात्रि-दिवे काले विषुवद् विषुवं च तत् । | |
| 1 *Pouṣee.* | 'पुष्य-युक्ता पौर्णमासी पौषी, मासे तु यत्र सा ॥ | |
| 1 *Pouṣā.* | २ नाम्ना स पौषो, माघाऽऽद्याश् चैवमेकादशाऽपरे,'। | |
| 4 *A'grahaʹyana.* | मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ॥ | |
| 3 *Pausha.* 3 *Pha'lguna.* | १५ पौषे तैष सहस्यौ द्वौ, तपा माघे,ऽथ फाल्गुने। | 2 *Māgha.* |
| 3 *Chaitra.* | स्यात् तपस्यः फाल्गुनिकः, स्याच्चैत्रे चैत्रिको मधुः ॥ | |
| 3 *Vais'ak'ha.* 2 *Jyaisht'ha.* | १६ वैशाखे माधवो राधो, ज्येष्ठे शुक्रः, शुचिस्त्वयम् । | |
| 2 *Ashād'ha.* 3 *Śrāvaña.* | आषाढे, श्रावणे तु स्यान् नभाः श्रावणिकश्च सः ॥ | |
| 4 *Bhādrapad.* | १७ स्युर्नभस्य-प्रौष्ठपद-भाद्र-भाद्रपदाः समाः । | |
| 3 *Āświna.* 4 *Kārtika.* | स्यादाश्विन इषोऽप्याश्वयुजोऽपि, स्यात् तु कार्तिके ॥ | |
| 1 Cold season. 1 Winter. | १८ बाहुलोर्जौ कार्तिकिको, हेमन्तः, शिशिरोऽस्त्रियाम् । | |
| 4 Spring. | वसन्ते पुष्पसमयः सुरभिर्, ग्रीष्म ऊष्मकः ॥ | |

7 Hot season. १९ निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।
2 Rains. 1 Sultry season. स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा, अथ शरत् स्त्रियाम् ॥
1 Season. २० षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।
6 A year. संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः ॥
11 A patriarchal day. २१ मासेन स्यादहो-रात्रः पैत्रो, वर्षेण दैवतः, । 1 Day of the gods.
Day of *Brahmā*. दैवे युग-सहस्रे द्वे ब्राह्मः, कल्पौ तु तौ नृणाम्, ॥ 2 *kalpa*.
1 *Manvantara*. २२ मन्वन्तरं तु दिव्यानां युगानामेक-सप्ततिः, ।
5 destruction of the warld. संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥
12 Sin. २३ अ-स्त्री पङ्कं पुमान् पाप्मा पापं किल्बिष कल्मषम् ।
कलुषं वृजिनैनोऽघमंहो दुरित-दुष्कृतम् ॥
5 Virtue or moral merit. २४ स्याद् धर्ममस्त्रियां पुण्य-श्रेयसी सुकृतं वृषः ।
12 Joy, or pleasure. मुत् प्रीतिः प्रमदो हर्षः प्रमोदाऽऽमोद-संमदाः ॥
२५ स्यादानन्दथुरानन्दः शर्म-शात-सुखानि च ।
12 Happy, well, or right. श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ॥
२६ भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।
शस्तं चाऽथ त्रिषु द्रव्ये पापं पुण्यं सुखाऽऽदि च ॥
5 Excellence, or happiness. २७ मतल्लिका मचर्चिका प्रकाण्डमुद्ध-तल्लजौ ।
1 Good luck प्रशस्त-वाचकान्यमून्ययः शुभाऽऽवहो विधिः ॥
6 Destiny, or luck. २८ दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर् विधिः ।
3 A cause. हेतुर् ना कारणं बीजं निदानं त्वाऽऽदिकारणम् ॥ 1 Primary cause.
3 The soul. २९ क्षेत्रज्ञ आत्मा पुरुषः, प्रधानं प्रकृतिः स्त्रियाम् । 2 Nature.
1 State. 3 Qualities of nature. विशेषः कालिको ऽवस्था, गुणाः सत्वं रजस् तमः ॥
6 Birth. ३० जनुर्-जनन-जन्मानि जनिरुत्पत्तिरुद्भवः ।
6 An animal. प्राणी तु चेतनो जन्मी जन्तु-जन्यु-शरीरिणः ॥

| | |
|---|---|
| 3 Kind.<br>3 Individualiry. | ३१ जातिर् जातं च सामान्यं, व्यक्तिस् तु पृथगात्मता । |
| 7 The mind or faculty of reason. | चित्तं तु चेतो हृदयं स्वान्तं हृन् मानसं मनः ॥ |
| | इति कालवर्गः ३, अत्र मूलश्लोकाः ३१, क्षे० १$\frac{1}{2}$. |

---

## अथ धी-वर्गः ४

| | | |
|---|---|---|
| 14 Understanding or intellect. | १ बुद्धिर् मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । | |
| | प्रेक्षोपलब्धिश् चित् संवित् प्रतिपज्-ज्ञप्ति-चेतनाः ॥ | |
| 1 Retentive intellect. | २ धीर् धारणावती मेधा, संकल्पः कर्म मानसम् । | 1 Determination. |
| 3 Satisfaction. | १ ' अवधानं समाधानं प्रणिधानं तथैव च ' ॥ | |
| 2 Consciousness of pleasure or pain. | चित्ताभोगो मनस्कारश्, चर्चा संख्या विचारणा । | 3 Reflection. |
| 3 Reasoning. | 'विमर्शो भावना चैव वासना च निगद्यते' ॥ | |
| | ३ अध्याहारस् तर्क ऊहो, विचिकित्सा तु संशयः । | 4 Doubt. |
| 2 Decision. | संदेह-द्वापरौ चा,ऽथ समौ निर्णय-निश्चयौ ॥ | |
| 2 Heterodox or kerssry. | ४ मिथ्यादृष्टिरनास्तिकता, व्यापादो द्रोहचिन्तनम् । | 2 Malice. |
| 2 Conclusion.<br>3 Mistake. | समौ सिद्धान्त-राद्धान्तौ, भ्रान्तिर् मिथ्यामतिर् भ्रमः ॥ | |
| 10 Agreement. | ५ संविदाऽऽगूः प्रतिज्ञानं नियमाऽऽश्रव-संश्रवाः । | |
| | अङ्गीकाराऽभ्युपगम-प्रतिश्रव-समाधयः ॥ | |
| 1 True knowledge.<br>1 Knowledge of arts. | ६ मोक्षे धीर् ज्ञानमन्यत्र विज्ञानं शिल्प-शास्त्रयोः । | |
| 8 Beatitude. | मुक्तिः कैवल्य-निर्वाण-श्रेयो-निःश्रेयसाऽमृतम् ॥ | |
| 4 Spiritual ingorance. | ७ मोक्षोऽपवर्गो,ऽथाऽज्ञानमविद्याऽहम्मतिः स्त्रियाम् । | |
| 3 Five objects of sense.<br>1 An object of sense. | रूपं शब्दो गन्ध-रस-स्पर्शाश् च विषया अमी ॥ | |
| 3 An organ of sense. | ८ गोचरा इन्द्रियार्थाश् च, हृषीकं विषयीऽन्द्रियम् । | |
| 1 organ of action.<br>1 An intellectual organ. | कर्मेन्द्रियं तु पाय्वाऽऽदि, मनो-नेत्राऽऽदि धीन्द्रियम । | |
| 2 An astringent taste.<br>1 Sweet. 1 Salt. | ९ तुवरस् तु कषायो ऽस्त्री, मधुरो, लवणः, कटुः, । | |
| 1 Bitter. 1 Pungent.<br>1 Sour. | तिक्तो, ऽम्लश् च, रसाः पुंसि, तद्वत्सु षडमी त्रिषु ॥ | |

| | |
|---|---|
| 1 A pleasing scent. 1 perfume. | १० विमर्दोत्थे परिमलो गन्धे जन-मनो-हरे। आमोदः सोऽति-निर्हारी, वाच्य-लिङ्गत्वमागुणात् ॥ |
| 2 A scent spreading far. 4 fragrant substance. 2 A perfume for the mouth. | ११ समाकर्षी तु निर्हारी, सुरभिर् घ्राणतर्पणः। इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ |
| 4 An ill smelling substance. 1 A smell like that of raw meat | १२ पूतिगन्धिस् तु दुर्गन्धो, विस्रं स्यादाम-गन्धि यत्। शुक्ल-शुभ्र-शुचि-श्वेत-विशद-श्येत-पाण्डराः ॥ 16 White. |
| 3 Yellowish white. 1 Grey. | १३ अवदातः सितो गौरो ऽवलक्षो धवलो ऽर्जुनः। हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस् तु धूसरः ॥ |
| 7 Black or dark blue. 3 Yellow. 3 Green. | १४ कृष्णे नीलाऽसित-श्याम-काल-श्यामल-मेचकाः। पीतो गौरो हरिद्राभः, पलाशो हरितो हरित् ॥ |
| 2 Red. 3 Crimson. 2 Dark-red. 2 Pale red or pink. | १५ लोहितो रोहितो रक्तः, शोणः कोकनदच्छविः। अव्यक्तरागस् त्वरुणः, श्वेतरक्तस् तु पाटलः ॥ |
| 2 Brown. 3 Purple. 6 Tawny. | १६ श्यावः स्यात् कपिशो, धूम्र-धूमलौ कृष्णलोहिते। कडारः कपिलः पिङ्ग-पिशङ्गौ कद्रु-पिङ्गलौ ॥ |
| 6 Variegated. | १७ चित्रं किर्मीर-कल्माष-शबलैताश् च कर्बुरे। गुणे शुक्लाऽदयः पुंसि, गुणि-लिङ्गास् तु तद्वति ॥ |

इति धी-वर्गः ४, अत्र मूलश्लोकाः १७, क्षेपकश्लोकः १.

---

## अथ शब्दादि-वर्गः ५

| | |
|---|---|
| 7 The goddess of speech. 6 Speech. | १ ब्राह्मी तु भारती भाषा गीर् वाग् वाणी सरस्वती। व्याहार उक्तिर् लपितं भाषितं वचनं वचः ॥ |
| 2 Ungrammatical language. 1 A word. 1 A sentence. | २ अपभ्रंशो ऽपशब्दः स्याच्छास्त्रे शब्दस् तु वाचकः। तिङ्-सुबन्त-चयो वाक्यं, क्रिया वा कारकाऽन्विता ॥ |

4 The *Védas*, or any one of them.
1 The duty enjoined by them.
1 Three *Védas*.

३ श्रुतिः स्त्री वेद आम्नायस् त्रयी, धर्मस् तु तद्-विधिः।
स्त्रियामृक् साम-यजुषी, इति वेदास् त्रयस् त्रयी॥

1 A *Védánga*.
2 The sacred name of God.

४ शिक्षेत्यादि श्रुतेरङ्गमो,ङ्कार-प्रणवौ समौ।

2 History.
1 An accent.

इतिहासः पुरावृत्तमु,दात्ताद्यास् त्रयः स्वराः॥

1 Logic
1 Ethics.
2 A tale.
1 A *Purāṇa*.

५ आन्वीक्षिकी, दण्डनीतिस्, तर्कविद्याऽर्थशास्त्रयोः।
आख्यायिकोपलब्धार्था, पुराणं पञ्च-लक्षणम्॥

1 A feigned story.
2 A riddle.
2 A code of laws.
2 A compilation and abridgment.

६ प्रबन्धकल्पना कथा, प्रवह्लिका प्रहेलिका।
स्मृतिस् तु धर्मसंहिता, समाहृतिस् तु संग्रहः॥

2 A part of a stanza.
2 A rumour.
4 Tidings or intelligence.

७ समस्या तु समासार्था, किंवदन्ती जनश्रुतिः।
वार्ता प्रवृत्तिर् वृत्तान्त उदन्तः स्यादथाऽह्वयः॥

3A call or summons.
1 Clamour.

८ आख्याऽह्वे अभिधानं च नामधेयं च नाम च।
हूतिराकारणा ऽऽह्वानं, संहूतिर् बहुभिः कृता॥

2 A contest or law suit.
2 The exordium.
2 An example or opposite argument.
2 An oath.

९ विवादो व्यवहारः स्यादुपन्यासस् तु वाङ्मुखम्।
उपोद्घात उदाहारः, शपनं शपथः पुमान्॥

3 A question.
2 An answer.
2 A groundless demand.

१० प्रश्नो ऽनुयोगः पृच्छा च, प्रतिवाक्योत्तरे समे।
मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम्॥

2 A false accusation.
1 An affectionte speech.
3 Fame. 4 Praise.

११ अभिशापः, प्रणादस् तु शब्दः स्यादनुराग-जः।
यशः कीर्तिः समज्ञा च, स्तवः स्तोत्रं स्तुतिर् नुतिः॥

1 Repetition.
2 Making a loud noise.
1 Voice in grief.

१२ आम्रेडितं द्विस् त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा।
काकुः स्त्रियां विकारो यः शोक-भीत्यादिभिर् ध्वनेः॥

10 Censure, blame, or contempt.

१३ अवर्णाऽक्षेप-निर्वाद-परीवादाऽपवाद-वत्।
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे॥

2 Unfriendly speech. 2 Reproach — १४ पारुष्यमतिवादः स्याद्, भर्त्सनं त्वपकारगीः ।
1 Disparagement. — यः स-निन्द उपालम्भस् तत्र स्यात् परिभाषणम् ॥
1 An imputation of adultery. — १५ तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।
2 Address, 1 Incoherent speech. — स्यादाभाषणमालापः, प्रलापोऽनर्थकं वचः ॥
2 Tautology 2 Lamentation. — १६ अनुलापो मुहुर्भाषा, विलापः परिदेवनम् ।
2 Quarrel. 1 Conversation. — विप्रलापो विरोधोक्तिः, संलापो भाषणं मिथः ॥
2 Speaking well. — १७ सुप्रलापः सुवचनमपलापस् तु निह्नवः । — 2 Denial.
3 Strange querry. 3 Cursing. — चोद्यमाक्षेपाऽभियोगौ, शापाऽक्रोशौ दुरेषणा ॥
3 False love talk. — १८ 'अ-स्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्या-विकत्थनम्' ॥२
2 Message. — संदेशवाग् वाचिकं स्याद्, वाग्-भेदास् तु त्रिषूत्तरे ॥
1 Inauspicious speech. — १९ रुशती वाग-कल्याणी स्यात्, कल्या तु शुभाऽऽत्मिका
1 Good. 1 Very sweet. — अत्यर्थ-मधुरं सान्त्वं, संगतं हृदयङ्गमम् ॥ — 2 Proper.
2 Harsh. 2 Rustic. — २० निष्ठुरं परुषं, ग्राम्यमश्लीलं, सूनृतं प्रिये ।
1 Pleasing but true. 2 Inconsistent. — सत्ये, ऽथ संकुल-क्लिष्टे परस्पर-पराहते ॥
1 slurred. 2 Spoken fast. — २१ लुप्त-वर्ण-पदं ग्रस्तं, निरस्तं त्वरितोदितम् ।
1 Sputtered. 1 Unmeaning. — अम्बूकृतं स-निष्ठीवमबद्धं स्यादनर्थकम् ।
2 Unfit to be uttered. — २२ अनक्षरमवाच्यं स्यादाहतं तु मृषाऽर्थकम् । — 1 An impossibility.
2 Talkin jest. 2 Murmering at cohabitation. — 'सोल्लुठनं तु सोत्प्रासं, मणितं रतिकूजितम् ॥
5 Plain speech. 1 An indistinct speech. 1 False. — २३ श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम् । ' । ३ ।
अथ म्लिष्टमविस्पष्टं, वितथं त्वनृतं वचः ॥
4 Truth. — २४ सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ।
17 Sound. — शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वनाः ।
२५ स्वान-निर्घोष-निर्ह्राद-नाद-निस्वान-निस्वनाः ।
1 Rustling. — आरवाऽऽराव-संराव-विरावा, अथ मर्मरः ॥

6 The tinkling of ornaments. २६ स्वनिते वस्त्र-पर्णानां, भूषणानां तु शिञ्जितम् ।
निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ॥
2 the sound of a lute. २७ वीणाया क्वणिते प्रादेः प्रक्वाण-प्रक्वणाऽऽदयः ।
2 A confused sound. 1 The cry of birds, & c. कोलाहलः कलकलस्, तिरश्चां वाशितं रुतम् ॥
2 An echo. 2 A song or singing. २८ स्त्री प्रतिश्रुत् प्रतिध्वाने, गीतं गानमिमे समे ।
इति शब्दादि-वर्गः ५, अत्र मूलश्लोकाः २५॥, क्षे० २॥.

---

## अथ नाट्य-वर्गः ६

1 The seven musical notes. निषाद-र्षभ-गान्धार-षड्ज-मध्यम-धैवताः ॥
१ पञ्चमश् चेत्यमी सप्त तन्त्री-कण्ठोत्थिताः स्वराः ।
1 Minute tone. काकली तु कले सूक्ष्मे, ध्वनौ तु मधुराऽस्फुटे ॥
1 An inarticulate, but pleasing tone. 2 low tone. २ कलो, मन्द्रस् तु गम्भीरे, तारोऽत्युच्चैस्, त्रयस् त्रिषु ।
' नृणामुरसि मध्यस्थो द्वाविंशति-विधो ध्वनिः, ॥
1 A high tone. 1 Harmony. ३ स मन्द्रः कण्ठ-मध्य-स्थस्, तारः शिरसि गीयते ' । १ ।
3 A lute. समन्वित-लयस् त्वेकतालो, वीणा तु वल्लकी ॥
1 A lute with seven strings. ४ विपञ्ची, सा तु तन्त्रीभिः सप्तभिः परिवादिनी ।
1 Any stringed instrument. ततं वीणाऽऽदिकं वाद्यमानद्धं मुरजाऽऽदिकम् ॥
1 A Drum or tympan.
1 A wind instrument. ५ वंशाऽऽदिकं तु सुषिरं, कांस्य-तालाऽऽदिकं घनम् ।
1 A cymbal bell. 2 A musical instrument. चतुर्विधमिदं वाद्यं वादित्राऽऽतोद्य-नामकम् ॥
2 Drums and tabours. ६ मृदङ्गा मुरजा, भेदास् त्वङ्क्याऽऽलिङ्ग्योर्ध्वकास् त्रयः ।
1 Three sorts of drums. स्याद् यशःपटहो ढक्का, भेरी स्त्री दुन्दुभिः पुमान् ॥
2 A double drum. 2 A kettle drum.
2 A large kettle drum. ७ आनकः पटहोऽस्त्री स्यात्, कोणो वीणाऽऽदि-वादनम् ।
1 The quill, or bow. 2 The neck of a lute. वीणादण्डः प्रवालः स्यात् ककुभस् तु प्रसेवकः ॥
2 The belly below the neck.

1 The body of the lute. 1 the tie. ८ कोलम्बकस् तु कायो ऽस्या, उपनाहो निबन्धनम् ।
1 Other instrument. वाद्य-प्रभेदा——डमरु-मड्डु-डिण्डिम-झर्झराः ॥

2 A female dancer. ९ मर्दलः पणवो ऽन्ये च, नर्तकी-लासिके समे ।
1 Slow, quick, and mean time. विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥
1 Beating time. 1 Equal time in music and dance. १० तालः काल-क्रिया-मानं, लयः साम्यमथाऽस्त्रियाम् ।
6 Dancing. ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने ॥

2 Symphony. ११ तौर्यत्रिकं नृत्य-गीत-वाद्यं नाट्यमिदं त्रयम् ।
3 A male dancer in woman's apparel. भ्रकुंसश् च भ्रुकुंसश् च भ्रूकुंसश् चेति नर्तकः ॥
1 A courtesan. 1 A sister's husband. १२ स्त्री-वेष-धारी पुरुषो, नाट्योक्तौ——गणिका ऽज्जुका ।
1 A learned man. भगिनी-पतिरावुत्तो, भावो विद्वानथाऽऽवुकः ॥
1 A father. 2 A prince. १३ जनको, युव-राजस् तु कुमारो भर्तृदारकः ।
2 A king, 1 A princess. राजा भट्टारको देवस्, तत्-सुता भर्तृदारिका ॥
1 A queen. 1 Any wife of a king. १४ देवी कृताऽभिषेकायामितरासु तु भट्टिनी ।
1 Sacred. अ-ब्रह्मण्यम-वध्योक्तौ, राजश्यालस् तु राष्ट्रियः ॥
1 king's brother in-law.
1 A mother. 2 A young girl. १५ अम्बा माता, ऽथ बाला स्याद् वासूरार्यस् तु मारिषः ।
1 venerable person. 1 An eldest sister. अत्तिका भगिनी ज्येष्ठा, निष्ठा-निर्वहणे समे ॥ 2 The catastrophe.
1 Appropriate vocatives, for female servants. १६ हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखीं प्रति ।
2 Gesture. अङ्गहारो ऽङ्गविक्षेपो, व्यञ्जकाऽभिनयौ समौ ॥
2 Indication of passion.
2 two sorts of tokens. १७ निर्वृत्ते त्वङ्ग-सत्त्वाभ्यां द्वे त्रिष्वाङ्गिक-सात्त्विके ।
शृङ्गार-वीर-करुणाऽद्भुत-हास्य-भयानकाः ॥

1 Taste, or sentiment. १८ बीभत्स-रौद्रौ च रसाः, शृङ्गारः शुचिरुज्ज्वलः ।
3 Love. 2 Heroism. उत्साहवर्धनो वीरः, कारुण्यं करुणा घृणा ॥ 3 Pity.
7 Tender-ness. १९ कृपा दया ऽनुकम्पा स्यादनुक्रोशोऽप्यथो हसः ।
3 Laughter. 2 Disgust. हासो हास्यं च, बीभत्सं विकृतं त्रिष्विदं द्वयम् ॥

4 Surprise or wonderful.
9 Horror or terrific.

२० विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ।
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ॥

2 Wrath, or angry.
6 Fear, or terror.

२१ भयङ्करं प्रतिभयं, रौद्रं तूग्रममी त्रिषु ।
चतुर्दश, दरस् त्रासो भीतिर् भीः साध्वसं भयम् ॥

1 Sentiment or passion.
1 Indication of it.
5 Pride.

२२ विकारो मानसो भावो, ऽनुभावो भाव-बोधकः ।
गर्वो ऽभिमानो ऽहङ्कारो मानश् चित्तसमुन्नतिः ॥

6 Arrogance.
9 Disrespect.

२३ 'दर्पो ऽवलेपो ऽवष्टम्भश् चित्तोद्रेकः स्मयो मदः' ।२।
अनादरः परिभवः परीभावस् तिरस्क्रिया ॥

२४ रीढा ऽवमानना ऽवज्ञा ऽवहेलनमसूक्षणम् ।

5 Modesty or shame.
1 Bashfulness.

मन्दाक्षं ह्रीस् त्रपा व्रीडा लज्जा, सा ऽपत्रपा ऽन्यतः ॥

2 Patience, forbearance.
1 Coveting another' property.

२५ क्षान्तिस् तितिक्षा, ऽभिध्या तु परस्य विषये स्पृहा ।
अक्षान्तिरीर्ष्या, ऽसूया तु दोषाऽऽरोपो गुणेष्वपि ॥

1 Detraction. 2 Envy.

3 Enmity
3 Grief or sorrow.
3 Repentance.

२६ वैरं विरोधो विद्वेषो, मन्यु-शोकौ तु शुक् स्त्रियाम् ।
पश्चात्तापो ऽनुतापश् च विप्रतीसार इत्यपि ॥

7 Wrath, or rage.
1 Good conduct.
2 Madness.

२७ कोप-क्रोधाऽमर्ष-रोष-प्रतिघा रुट्-क्रुधौ स्त्रियौ ।
शुचौ तु चरिते शीलमुन्मादश् चित्तविभ्रमः ।

5 Affection or kindness.
1 Desire or longing.
11 Wish or desire.

२८ प्रेमा ना प्रियता हार्दं प्रेम स्नेहो, ऽथ दोहदम् ।
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ॥

1 Virtuous reflexion.
1 Ardent desire.
1 Anxiety.

२९ कामोऽभिलाषस् तर्षश् च, सोऽत्यर्थं लालसा द्वयोः ।
उपाधिर् ना धर्मचिन्ता, पुंस्याधिर् मानसी व्यथा ॥

3 Recollection.
2 Missing.
2 Perseverance.
1 Fortitude.

३० स्याच् चिंता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ।
उत्साहोऽध्यवसायःस्यात्; स वीर्यमति-शक्ति-भाक् ॥

9 Deceit, or fraud.
2 Inadvertency or mistake.

३१ कपटो ऽस्त्री व्याज-दम्भोपधयश् छद्म-कैतवे ।
कुसृतिर् निकृतिः शाठ्यं, प्रमादो ऽनवधानता ॥

4 Eagerness.
1 Dalliance or blandishment.

३२ कौतूहलं कौतुकं च कुतुकं च कुतूहलम् ।
स्त्रीणां विलास-विव्वोक-विभ्रमा ललितं तथा ॥

6 Sport or amusement.

३३ हेला लीलेत्यमी हावाः क्रियाः शृङ्गार-भाव-जाः ।
द्रव-केलि-परीहासाः क्रीडा लीला च नर्म च ॥

3 Disguise.
3 A play or game.
3 Sweat.
2 Fainting.

३४ व्याजोऽपदेशो लक्ष्यं च, क्रीडा खेला च कूर्दनम् ।
घर्मो निदाघः स्वेदः स्यात्, प्रलयो नष्टचेष्टता ॥

2 Dissimulation.
2 Hurry.
I A horse-laugh.
1 A smile.

३५ अवहित्थाऽऽकारगुप्तिः, समौ संवेगसंभ्रमौ ।
स्यादाच्छुरितकं हासः सोत्प्रासः, स मनाक् स्मितम् ॥

1 A laugh.
1 Horripilation.
3 Weeping.
1 Gaping.

३६ मध्यमः स्याद् विहसितं, रोमाञ्चो रोमहर्षणम् ।
क्रन्दितं रुदितं क्रुष्टं, जृम्भस् तु त्रिषु जृम्भणम् ॥

2 Disappointing.
2 Creeding or tumbling.
5 Sleep.

३७ विप्रलम्भो विसंवादो, रिङ्गणं स्खलनं समे ।
स्यान् निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥

2 Lassitude.
3 A frown.
1 A look of displeasure.

३८ तन्द्री प्रमीला, भ्रकुटिर् भ्रुकुटिर् भ्रूकुटिः स्त्रियाम् ।
अदृष्टिः स्याद-सौम्ये ऽक्षिण, संसिद्धि-प्रकृती त्विमे ॥

5 The naturaī state.
2 A tremour.
5 A festival.

३९ स्वरूपं च स्वभावश् च निसर्गश् चाऽथ वेपथुः ।
कम्पो, ऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥

इति नाट्य-वर्गः ६, अत्र मूलश्लोकाः ३७॥• क्षे० १ १/२

---

## अथ पातालभोगि-वर्गः ७

5 the infernal region.
11 A hole or vacuity.

१ अधोभुवन-पातालं बलिसद्म रसातलम् ।
नागलोको, ऽथ कुहरं सुषिरं विवरं बिलम् ॥

2 A hole in the ground.
1 Perforated, or full of holes.

२ छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः ।
गर्ताऽवटौ भुवि श्वभ्रे, स-रन्ध्रे सुषिरं त्रिषु ॥

5 Darkness.
1 Universal darkness. 1 Imperfect darkness.

३ अन्धकारो ऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।
ध्वान्ते गाढे ऽन्धतमसं, क्षीणे ऽवतमसं, तमः ॥

2 The Nagas.
2 Their chief.
2 Vasuki.
2 Sort of snake.

४ विष्वक् संतमसं, नागाः काद्रवेयास्, तदीश्वरे ।
शेषो ऽनन्तो, वासुकिस् तु सर्पराजो, ऽथ गोनसे ॥

3 A Boa, or large serpent.
2 A water snake.
2 Amphisbæna.

५ तिलित्सः स्यादजगरे शयुर् वाहस इत्युभौ ।
अलगर्दो जलव्यालः समौ राजिल-डुण्डुभौ ॥

2 A variegated. serpent.
2 A snake, that has cast his slough.
33 A snake or serpent.

६ मालुधानो मातुलाहिर्, निर्मुक्तो मुक्तकञ्चुकः ।
सर्पः पृदाकुर् भुजगो भुजङ्गो ऽहिर् भुजङ्गमः ॥

७ आशीविषो विषधरश् चक्री व्यालः सरीसृपः ।
कुण्डली गूढपाच् चक्षुःश्रवाः काकोदरः फणी ॥

८ दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥

९ ' लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा । १ ।
कुम्भीनसः फणधरो हरिर् भोगधरस् तथा ॥

1 His boly.
2 Jawas.

१० अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका । '। २ ।

1 Belonging to a snake.
2 His expanded head.

त्रिष्वाहेयं विषाऽस्थ्यादि, स्फटायां तु फणा द्वयोः ॥

2 His skin.
3 His venom.
1 Nine sorts of fixed poison.

११ समौ कञ्चुक-निर्मोकौ, क्ष्वेडस् तु गरलं विषम् ।
पुंसि क्लीबे च काकोल-कालकूट-हलाहलाः ॥

१२ सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ।
दारदो वत्सनाभश् च विष-भेदा अमी नव ॥

1 A dealer in antidotes.
2 A snake-catcher.

१३ विषवैद्यो जाङ्गुलिको, व्यालग्राह्यहितुण्डिकः ।

इति पातालभोगि-वर्गः ७, अत्र मूलश्लोकाः ११, क्षे० १॥.

## अथ नरक-वर्गः ८

4 Hell.
Various hells.

स्यान् नारकस् तु नरको निरयो दुर्गतिः स्त्रियाम् ॥
१ तद्-भेदास्— तपनाऽवीचि-महारौरव-रौरवाः ।
संघातः कालसूत्रं चेत्याऽऽद्याः, सत्वास् तु नारकाः ॥

2 Departed souls.
1 The river of hell.
1 Misfortune or misery.
1 Throwing in hell.

२ प्रेता, वैतरणी सिन्धुः स्याद्, लक्ष्मीस् तु निर्ऋतिः ।
विष्टिराजूः, कारणा तु यातना तीव्रवेदना ॥ 3 Agony.

4 Mental halu.
2 Pain of labor.
3 Corporeal pain.

३ पीडा बाधा व्यथा दुःखमा,मनस्यं प्रसूतिजम् ।
स्यात् कष्टं कृच्छ्रमाभीलं, त्रिष्वेषां भेद्य-गामि यत् ॥

इति नरकवर्गः ८, अत्र मूलश्लोकाः ३॥, क्षे०.

---

## अथ वारि-वर्गः ९

15 The sea or ocean.

१ समुद्रो ऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरो ऽर्णवः ॥
२ रत्नाकरो जलनिधिर् यादःपतिरपाम्पतिः ।

2 Particular seas.

तस्य प्रभेदाः—क्षीरोदो लवणोदस् तथा ऽपरे ॥

27 Water.

३ आपः स्त्री भूम्नि, वार् वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ।
४ कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोर्णस् तोय-पानीय-नीर-क्षीराऽम्बु-शम्बरम् ॥

2 Watery.

५ मेघपुष्पं घनरसस्, त्रिषु द्वे आप्यमम्मयम् ।

4 A wave.

भङ्गस् तरङ्ग ऊर्मिर् वा स्त्रियां वीचिरथोर्मिषु ॥

2 A surge or billow.
1 A whirlpool.
4 A drop of water.

६ महत्सूल्लोल-कल्लोलौ, स्यादावर्तो ऽम्भसां भ्रमः ।
पृषन्ति बिन्दु-पृषताः पुमांसो विप्रुषः स्त्रियाम् ॥

2 A winding descent of water.
2 A drain.
5 A shore or bank.

७ चक्राणि पुटभेदाः स्युर्, भ्रमाश् च जलनिर्गमाः ।
कूलं रोधश् च तीरं च प्रतीरं च तटं त्रिषु ॥

1 The bed.
2 An island.

८ पाराऽऽवारे पराऽर्वाची तीरे, पात्रं तदन्तरम् ।
द्वीपो ऽस्त्रियामन्तरीपं यदन्तर् वारिणस् तटम् ॥

1 One formed by alluvion.
2 A sand bank.
5 Mud or clay.

९ तोयोत्थितं तत् पुलिनं, सैकतं सिकतामयम् ।
निषद्वरस् तु जम्बालः पङ्को ऽस्त्री शाद-कर्दमौ ॥

2 Inundation.
2 A temporary well, fountain.
1 Navigable. 3 A boat.

१० जलोच्छ्वासाः परीवाहाः, कूपकास् तु विदारकाः ।
नाव्यं त्रि-लिङ्गं नौ-तार्ये, स्त्रियां नौस् तरणिस् तरिः ॥

3 A raft or float.
1 A natural stream.
2 Fare or freight.
2 An oval basin.

११ उडुपं तु प्लवः कोलः, स्रोतो ऽम्बु-सरणं स्वतः ।
आतरस् तरपण्यं स्याद्, द्रोणी काष्ठाम्बुवाहिनी ॥

2 A voyaging merchant.
2 The pilot or helmsman.

१२ सांयात्रिकः पोतवणिक्, कर्णधारस् तु नाविकः ।
नियामकाः पोतवाहाः, कूपको गुणवृक्षकः ॥

2 The crew.
2 The mast.

2 The oar.
2 The rudder.
2 A scraper or shovel.
2 A bucket.

१३ नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः ।
अभ्रिः स्त्री काष्ठकुद्दालः, सेकपात्रं तु सेचनम् ॥

1 The boat's half.
1 Landed from a boat.
2 Clear, transparent.

१४ क्लीबे ऽर्धनावं नावो ऽर्धे, ऽतीतनौके ऽतिनु त्रिषु ।
त्रिष्वागाधात्, प्रसन्नोऽच्छः, कलुषोऽनच्छ आविलः ॥

3 Turbid water.

3 Deep.
1 shallow.
3 A fisherman.

१५ निम्नं गभीरं गम्भीरमुत्तानं तद्-विपर्यये ।
अगाधमतलस्पर्शे, कैवर्ते दाश-धीवरौ ॥

2 A net.
2 Packthread.
2 A fish basket.
2 Goad.

१६ आनायः पुंसि, जालं स्याच्छणसूत्रं पवित्रकम् ।
मत्स्याधानी कुवेणी स्याद्, बडिशं मत्स्यवेधनम् ॥

8 A fish.

१७ पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।
विसारः शकुली चाथ गडकः शकुलार्भकः ॥

2 Sheat fish.
2 A porpoise.
2 Sort of sprat.
2 A sort of carp.

१८ सहस्रदंष्ट्रः पाठीन, उलूपी शिशुकः समौ ।
नलमीनश् चिलिचिमः, प्रोष्ठी तु शफरी द्वयोः ॥

1 Small fry.
1 Various sorts of fish.

१९ क्षुद्राऽण्ड-मत्स्य-संघातः पोताधान, मथो झषाः– ।
रोहितो मद्गुरः शालो राजीवः शकुलस् तिमिः ॥

2 Aquatic animals.
Various sorts.

२० तिमिङ्गिलाऽऽदयश् चाथ यादांसि जलजन्तवः ।
तद्-भेदाः–शिशुमारोद्र-शङ्कवो मकराऽऽदयः ॥

2 A crab.
3 A turtle or tortoise.
2 A shark.
2 A crocodile.

२१ स्यात् कुलीरः कर्कटकः, कूर्मे कमठ-कच्छपौ ।
ग्राहोऽवहारो, नक्रस् तु कुम्भीरो, ऽथ महीलता ॥

3 A worm.
2 A gangetic alligator.
3 A leech.

२२ गण्डूपदः किञ्चुलको, निहाका गोधिका समे ।
रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥

2 A pearl oyster.
2 A conch.
2 small shell.
2 A bivalve shell.

२३ मुक्तास्फोटः स्त्रियां शुक्तिः, शङ्खः स्यात् कम्बुर-स्त्रियौ ।
क्षुद्रशङ्खाः शङ्खनखाः, शम्बूका जलशुक्तयः ॥

6 A frog.
2 A small worm.
2 A female frog.
2 A female turtle.

२४ भेके मण्डूक-वर्षाभू-शालूर-प्लव-दर्दुराः ।
शिली गण्डूपदी, भेकी वर्षाभ्वी, कमठी डुलिः ॥

1 Sort of sheat-fish.
2 A cockle.
2 A lake or pond.
1 A deep lake.

२५ मद्गुरस्य प्रिया शृङ्गी, दुर्नामा दीर्घकोशिका ।
जलाशया जलाधारास्, तत्राऽगाध-जलो ह्रदः ॥

2 A trough near a well.
4 A well.
1 The wooden frame for the rope.

२६ आहावस् तु निपानं स्यादुपकूप-जलाशये ।
पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥

1 The cover or facing of a well.
2 A square or a large pond.
2 A natural pond.

२७ नेमिस् त्रिकाऽस्य, वीनाहो मुख-बन्धनमस्य यत् ।
पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥

5 One deep enough for the lotus.
2 A basin.
2 Well.

२८ पद्माकरस् तडागो ऽस्त्री कासारः सरसी सरः ।
वेशन्तः पल्वलं चाऽल्पसरो, वापी तु दीर्घिका ॥

2 A moat or ditch.
1 A dike.
3 A basin round the foot of a tree.

२९ खेयं तु परिखा, ऽऽधारस् त्वम्भसां यत्र धारणम् ।
स्यादालवालमावालमावापो, ऽथ नदी सरित् ॥

16 A river.

३० तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥

३१ 'कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती'। १।

8 The *Ganges*. — गङ्गा विष्णुपदी जन्हुतनया सुरनिम्नगा ॥

३२ भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ।

4 The *Yamunā*. — कालिन्दी सूर्यतनया यमुना शमनस्वसा ॥

4 The *Narmadā*. — ३३ रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ।

2 The *Karatôyā*.
2 The *Bāhudā*. — करतोया सदानीरा, बाहुदा सैतवाहिनी ॥

2 The *Satadru*
2 The *Vipāsā*. — ३४ शतद्रुस् तु शुतुद्रिः स्याद्, विपाशा तु विपाट् स्त्रियाम् ।

2 The *Sôna*.
1 A canal. — शोणो हिरण्यवाहः स्यात् कुल्याऽल्पा कृत्रिमा सरित् ॥

Various rivers. — ३५ शरावती वेत्रवती चन्द्रभागा सरस्वती ।

1 The mouth of a river. — कावेरी सरितो ऽन्याश् च, संभेदः सिन्धुसंगमः ॥

1 An issue from a pond. — ३६ द्वयोः प्रणाली पयसः पदव्यां, त्रिषु तूत्तरौ ।

belonging to certain Rivers. — देविकायां सरय्वां च भवे दाविक-सारवौ ॥

2 White water lily. — ३७ सौगन्धिकं तु कल्हारं, हल्लकं रक्तसंध्यकम् ।

1 A red one.
2 A water lily. — स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ॥

2 A blue one. — ३८ इन्दीवरं च नीलेऽस्मिन्, सिते कुमुद-कैरवे । — 2 The esculent white sort.

1 The root of a water lily.
2 Pistia stratiotes. — शालूकमेषां कन्दः स्याद्, वारिपर्णी तु कुम्भिका ॥

3 Vallisneria.
2 A place abounding in water-lilies. — ३९ जलनीली तु शैवालं शैवलो, ऽथ कुमुद्वती ।

3 An assemblage of lotus flowers. — कुमुदिन्यां, नलिन्यां तु विसिनी-पद्मिनी-मुखाः ॥

16 A lotus. — ४० वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।

सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥

४१ पङ्केरुहं तामरसं सारसं सरसीरुहम् ।

विसप्रसून-राजीव-पुष्कराऽम्भोरुहाणि च ॥

2 A white lotus. — ४२ पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ।

3 A red lotus.
2 The stalk of a water-lily. — रक्तोत्पलं कोकनदं, नालो नालमथाऽस्त्रियाम् ॥

2 The film or fibres attendent on it. ४३ मृणालं बिसमब्जादि-कदम्बे खण्डमस्त्रियाम् । 1 Assemblage of water lilies

2 The root of a water-lily. करहाटः शिफाकन्दः, किञ्जल्कः केसरोऽस्त्रियाम् ॥

2 A filament.

2 A new leaf of a water-lily. ४४ संवर्तिका नवदलं, वीजकोशो वराटकः ॥ 2 The seed of the lotus.

इति वारि-वर्गः ९, अत्र मूलश्लोकाः ४३, क्षे० ॥.

४५ उक्तं स्वर्-व्योम-दिक्-काल-धी-शब्दादि स-नाट्यकम् ।
पातालभोगि-नरकं वारि चैषां च संगतम् ॥

४६ इत्यमरसिंह-कृतौ नाम-लिङ्गाऽनुशासने ।
स्वरादि-काण्डः प्रथमः साऽङ्ग एव समर्थितः ॥

इति प्रथमः स्वरादि-काण्डः समाप्तः ।

अत्र मूलश्लोकाः २८१ ॥, क्षे० श्लो० १८, सर्वे च मिलित्वा । २९९ ॥.

---

